# ॥ श्री विष्णु सहस्रनाम स्तोत्रम् ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥

ॐ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ १ ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परः शतम्।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥ २ ॥
व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ३ ॥
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ४ ॥
अविकाराय शुद्धाय नित्याय परमात्मने।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ ५ ॥
यस्य स्मरणमात्रेण जन्मसंसारबन्धनात्।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ ६ ॥
ॐ नमो विष्णवे प्रभविष्णवे।

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात्।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे॥
नमः समस्तभूतानामादिभूताय भूभृते।
अनेकरूपरूपाय विष्णवे प्रभविष्णवे॥

*वैशम्पायन उवाच*

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत॥ १ ॥

*युधिष्ठिर उवाच*

किमेकं दैवतं लोके किं वाप्येकं परायणम्।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम्॥ २ ॥
को धर्मः सर्वधर्माणां भवतः परमो मतः।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात्॥ ३ ॥

*भीष्म उवाच*

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः॥ ४ ॥
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च॥ ५ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्॥ ६ ॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम्।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम्॥ ७ ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा॥ ८ ॥
परमं यो महत्तेजः परमं यो महत्तपः।
परमं यो महद्ब्रह्म परमं यः परायणम्॥ ९ ॥
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्।
दैवतं देवतानां च भूतानां योऽव्ययः पिता॥ १० ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११ ॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते।
विष्णोर्नामसहस्त्रं मे शृणु पापभयापहम् ॥ १२ ॥
यानि नामानि गौणानि विख्यातानि महात्मनः।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥

ऋषिर्नाम्नां सहस्त्रस्य वेदव्यासो महामुनिः
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियोज्यते

विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम्
अनेकरूप दैत्यान्तं नमामि पुरुषोत्तमं ।

पूर्वन्यास:

श्री वेदव्यास उवाच

ॐ अस्य श्रीविष्णोर्दिव्यसहस्त्रनामस्तोत्रमहामन्त्रस्य ॥

श्री वेदव्यासो भगवान् ऋषिः ।

अनुष्टुप् छन्दः ।

श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता ।

अमृतांशूद्भवो भानुरिति बीजम् ।

देवकीनन्दनः स्त्रष्टेति शक्तिः ।

उद्भवः क्षोभणो देव इति परमो मन्त्रः ।

शङ्खभृन्नन्दकी चक्रीति कीलकम् ।

शार्ङ्गधन्वा गदाधर इत्यस्त्रम् ।

रथाङ्गपाणिरक्षोभ्य इति नेत्रम् ।

त्रिसामा सामगः सामेति कवचम् ।

आनन्दं परब्रह्मेति योनिः ।

ऋतुः सुदर्शनः काल इति दिग्बन्धः ।

श्रीविश्वरूप इति ध्यानम् ।

श्री महाविष्णु प्रीत्यर्थे सहस्त्रनामस्तोत्रपाठे विनियोगः ॥

अथ न्यास:

ॐ शिरसी वेदव्यासऋषये नम:

मुखे अनुष्टुप्छन्दसे नम:

हृदि श्रीकृष्णपरमात्मदेवतायै नम:

गुह्ये अमृतांशूद्भवो भानुरिति बीजाय नम:

पादयोर्देवकीनन्दन: स्रष्टेति शक्तये नम:

सर्वाङ्गे शंखभृन्नन्दकी चक्रीति कीलकाय नम:

करसम्पुटे मम श्रीकृष्ण प्रीत्यर्थे जपे विनियोगाय नम:

इति ऋषयादिन्यास:

अथ करन्यास:

ॐ विश्वं विष्णुर्वषट्कार इत्यङ्गुष्ठाभ्यां नम:

अमृतांशूद्भवो भानुरिति तर्जनीभ्यां नम:

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेति मध्यमाभ्यां नम:

सुवर्णबिन्दुरक्षोभ्य इत्यनामिकाभ्यां नम:

निमिषोऽनिमिष: स्रग्वीति कनिष्ठिकाभ्यां नम:

रथाङ्गपाणिरक्षोभ्य इति करतलकरपृष्ठाभ्यां नम:

इति करन्यास:

अथ षडङ्गन्यास:

ॐ विश्वं विष्णुर्वषट्कार इति हृदयाय नम:

अमृतांशूद्भवो भानुरिति शिरसे स्वाहा

ब्रह्मण्यो ब्रह्मकृतब्रह्मेति शिखायै वषट्

सुवर्णबिन्दुरक्षोभ्य इति कवचाय हुम्

निमिषोऽनिमिष: स्रग्वीति नेत्रत्रयाय वौषट्

रथांगपाणिरक्षोभ्य इत्यस्त्राय फट् ।

इति षडङ्गन्यास:

श्री कृष्णप्रीत्यर्थे विष्णुर्दिव्यसहस्रनामजपमहं करिष्ये । इति संकल्पं

॥ ध्यानम् ।

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतेमौक्तिकानां
मालाक्लृप्तासनस्थः स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः ।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूष वर्षैः
आनन्दी नः पुनीयादरिनलिनगदा शङ्खपाणिर्मुकुन्दः ॥ १ ॥

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्र सूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैः
चित्रं रंरम्यते तं त्रिभुवन वपुषं विष्णुमीशं नमामि ॥ २ ॥

ॐ नमो भगवते वासुदेवाय ।

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ ३ ॥

मेघश्यामं पीतकौशेयवासं
श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।

पुण्योपेतं पुण्डरीकायताक्षं
विष्णुं वन्दे सर्वलोकैकनाथम् ॥ ४ ॥
सशङ्खचक्रं सकिरीटकुण्डलं
सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षःस्थलकौस्तुभश्रियं
नमामि विष्णुं शिरसा चतुर्भुजम् ॥ ५ ॥
छायायां पारिजातस्य हेमसिंहासनोपरि
आसीनमम्बुदश्याममायताक्षमलंकृतम् ।
चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कित वक्षसं
रुक्मिणी सत्यभामाभ्यां सहितं कृष्णमाश्रये ॥ ६ ॥

ॐ विश्वम् विष्णु: वषट्कार: भूतभव्यभवत्प्रभु:
भूतकृत भूतभृत् भाव: भूतात्मा भूतभावन: पूतात्मा

परमात्मा मुक्तानां परमा गति: अव्यय: पुरुष: साक्षी
क्षेत्रज्ञ: अक्षर: योग: योगविदां नेता प्रधानपुरुषेश्वर:

नारसिंहवपु: श्रीमान केशव: पुरुषोत्तम: सर्व: शर्व:
शिव: स्थाणु: भूतादि: निधिरव्यय:

सम्भव: भावन: भर्ता प्रभव: प्रभु: ईश्वर:
स्वयम्भू: शम्भु: आदित्य पुष्कराक्ष:

महास्वन: अनादिनिधन: धाता विधाता धातुरुत्तम:
अप्रमेय हृषीकेश: पद्मनाभ: अमरप्रभु विश्वकर्मा
मनु: त्वष्टा स्थविष्ठ: स्थविरो ध्रुव: अग्राह्य: शाश्वत:
कृष्ण: लोहिताक्ष: प्रतर्दन: प्रभूत:
त्रिककुब्धाम पवित्रम् मंगलं परम् ईशान: प्राणद: प्राण:
ज्येष्ठ: श्रेष्ठ: प्रजापति: हिरण्यगर्भ:

भूगर्भ: माधव: मधुसूदन: ईश्वर: विक्रमी धन्वी मेधावी
विक्रम: क्रम: अनुत्तम:

दुराधर्ष: कृतज्ञ: कृति आत्मवान सुरेश: शरणम् शर्म
विश्वरेता प्रजाभव: अह:

संवत्सर: व्याल: प्रत्यय: सर्वदर्शन: अज: सर्वेश्वर:
सिद्ध: सिद्धि: सर्वादि अच्युत:

वृषाकपि अमेयात्मा सर्वयोगविनिसृत: वसु: वसुमना:
सत्य: समात्मा असम्मित: सम: अमोघ:

पुण्डरीकाक्ष: वृषकर्मा वृषाकृति रुद्र: बहुशिरा: बभ्रु:
विश्वयोनि शुचिश्रवा: अमृत: शाश्वतस्थाणु:

वरारोह: महातपा: सर्वग: सर्वविद्भानु: विष्वक्सेन: जनार्दन:
वेद: वेदवित अव्यंगो: वेदांग:

वेदवित कवि: लोकाध्यक्ष: सुराध्यक्ष: धर्माध्यक्ष: कृताकृत:
चतुरात्मा चतुर्व्यूह: चतुर्दंष्ट्र चतुर्भुज:

भ्राजिष्णु: भोजनम् भोक्ता सहिष्णु: जगदादिज: अनघ:
विजय: जेता विश्वयोनि: पुनर्वसु:

उपेन्द्र: वामन: प्रांशु: अमोघ: शुचि: ऊर्जित: अतीन्द्र:
संग्रह: सर्ग: धृतात्मा

नियम: यम: वेद्य: वैद्य: सदायोगी वीरहा माधव:
मधु: अतीन्द्रिय महामाय:

महोत्साह: महाबल: महाबुद्धि: महावीर्य: महाशक्ति
महाद्युति अनिर्देश्यवपु: श्रीमान: अमेयात्मा महाद्रिधृक्

महेष्वास: महीभर्ता श्रीनिवास: सतांगति: अनिरुद्ध:
सुरानन्द: गोविन्द: गोविदांपति: मरीचि: दमन:

हंस: सुपर्ण: भुजगोत्तम: हिरण्यनाभ: सुतपा: पद्मनाभा
प्रजापति अमृत्यु सर्वदृक सिंह:

सन्धाता सँधिमान् स्थिरः अजः दुर्मर्षणः शास्ता
विश्रुतात्मा सुरारिहा गुरुः गुरुतमः
धाम सत्यः सत्यपराक्रमः निमिषः अनिमिषः स्रग्वी
वाचस्पतिरुदारधीः अग्रणीः ग्रामणीः श्रीमान्
न्यायः नेताः समीरणः सहस्रमूर्धा विश्वात्मा सहस्राक्षः
सहस्रपात् आवर्तनः निवृत्तात्मा संवृतः
सम्प्रमर्दनः अहःसंवर्तकः वह्निः अनिलः धरणीधरः
सुप्रसादः प्रसन्नात्मा विश्वधृक् विश्वभुक् विभुः
सत्कर्ता सत्कृतः साधुः जह्नुः नारायणः नरः
असंख्येयः अप्रमेयात्मा विशिष्ट शिष्टकृत
शुचिः सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः
वृषाही वृषभः विष्णुः वृषपर्वा वृषोदरः
वर्धनः वर्धमानः विविक्तः श्रुतिसागरः सुभुजः दुर्धरः
वाग्मी महेन्द्र वसुदः वसुः
नैकरूपः बृहद्रूपः शिपिविष्टः प्रकाशनः ओजस्तेजो द्युतिधरः
प्रकाशात्मा प्रतापनः ऋद्धः स्पष्टाक्षरः मन्त्रः
चन्द्रांशुः भास्करद्युतिः अमृतांशूद्भवः भानुः शशबिन्दुः
सुरेश्वरः औषधम् जगतःसेतुः सत्यधर्मपराक्रमः भूतभव्य-
भवन्नाथः
पवनः पावनः अनलः कामहा कामकृत कान्तः
कामः कामप्रदः प्रभुः युगादिकृतः

युगावर्तः नैकमायः महाशनः अदृश्यः अव्यक्तरूपः
सहस्त्रजित अनन्तजित इष्ट अविशिष्ट शिष्टेष्टः
शिखण्डी नहुषः वृषः क्रोधहा क्रोधकृत्कर्ता विश्वबाहुः
महीधरः अच्युतः प्रथितः प्राणः
प्राणदः वासवानुजः अपांनिधिः अधिष्ठानम् अप्रमत्तः
प्रतिष्ठितः स्कन्दः स्कन्दधरः धुर्यः वरदः
वायुवाहनः वासुदेवः बृहद्भानुः आदिदेवः पुरन्दरः अशोकः
तारणः तारः शूरः शौरिः
जनेश्वरः अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः
पद्मनाभः अरविन्दाक्षः पद्मगर्भः शरीरभृत महर्द्धिः
ऋद्धः वृद्धात्मा महाक्षः गरुडध्वजः अतुलः शरभः
भीमः समयज्ञः हविर्हरिः सर्वलक्षणलक्षण्यः
लक्ष्मीवान समितिञ्जय विक्षरः रोहितः मार्ग हेतुः
दामोदरः सहः महीधरः महाभागः
वेगवान अमिताशनः उद्भवः क्षोभणः देवः श्रीगर्भः
परमेश्वरः करणम् कारणम् कर्ता
विकर्ता गहनः गुहः व्यवसायः व्यवस्थानः संस्थानः
स्थानदः ध्रुवः परर्द्धि परमस्पष्टः
तुष्टः पुष्टः शुभेक्षणः रामः विरामः विरजः मार्गः
नेयः नयः अनयः
वीरः शक्तिमतां श्रेष्ठः धर्म धर्मविदुत्तमः वैकुण्ठः
पुरुषः प्राणः प्राणदः प्रणवः प्रथुः
हिरण्यगर्भः शत्रुघ्नः व्याप्तः वायुः अधोक्षजः
ऋतु सुदर्शनः कालः परमेष्ठी परिग्रहः

उग्र: संवत्सर: दक्ष: विश्राम: विश्वदक्षिण: विस्तार:
स्थावरस्थाणु: प्रमाणम् बीजमव्ययम अर्थ:
अनर्थ: महाकोश: महाभोग: महाधन: अनिर्विण्ण स्थविष्ठ:
अभू: धर्मयूप: महामख: नक्षत्रनेमि:
नक्षत्री क्षम: क्षाम: समीहन: यज्ञ: इज्य: महेज्य:
क्रतु: सत्रम् सतां गति:
सर्वदर्शी विमुक्तात्मा सर्वज्ञ: ज्ञानमुत्तमम सुव्रत सुमुख:
सूक्ष्म: सुघोष: सुखद: सुहृत:
मनोहर: जितक्रोध: वीरबाहु: विदारण: स्वापन: स्ववश:
व्यापी नैकात्मा नैककर्मकृत वत्सर:
वत्सल: वत्सी रत्नगर्भ: धनेश्वर: धर्मगुप धर्मकृत
धर्मी सत् असत् क्षरम
अक्षरम अविज्ञाता सहस्त्रांशु: विधाता कृतलक्षण:
गभस्तिनेमि: सत्त्वस्थ: सिंह: भूतमहेश्वर: आदिदेव:
महादेव: देवेश: देवभृद्गुरु उत्तर: गोपति: गोप्ता
ज्ञानगम्य: पुरातन: शरीरभूतभृत भोक्ता:
कपीन्द्र: भूरिदक्षिण: सोमप: अमृतप: सोम: पुरुजित
पुरुसत्तम: विनय: जय: सत्यसंधः
दाशार्ह: सात्वतां पति: जीव: विनयितासाक्षी मुकुन्द:
अमितविक्रम: अम्भोनिधि अनन्तात्मा महोदधिशय:
अन्तक:

अजः महार्हः स्वाभाव्यः जितामित्रः प्रमोदनः आनन्दः
नन्दनः नन्दः सत्यधर्मा त्रिविक्रमः
महर्षि कपिलाचार्यः कृतज्ञः मेदिनीपतिः त्रिपदः त्रिदशाध्यक्षः
महाशृंगः कृतान्तकृत् महावराहः गोविन्दः सुषेणः
कनकाङ्गदी गुह्यः गभीरः गहनः गुप्तः चक्रगदाधरः
वेधाः स्वाङ्गः अजितः कृष्णः
दृढः संकर्षणोऽच्युतः वरुणः वारुणः वृक्षः पुष्कराक्षः
महामनाः भगवान भगहा आनन्दी
वनमाली हलायुधः आदित्य ज्योतिरादित्यः सहिष्णुः
गतिसत्तमः सुधन्वा खण्डपरशुः दारुणः द्रविणप्रदः
दिविस्पृक् सर्वदृग्व्यासः वाचस्पतिरयोनिजः त्रिसामा
सामगः सामः निर्वाणम् भेषजमभिषक् सन्यासकृत्
शमः शान्ता निष्ठा शान्ति परायणम् शुभांगः
शान्तिदः स्रष्टा कुमुदः कुवलेशयः
गोहितः गोपतिः गोप्ता वृषभाक्षः वृषप्रियः अनिवर्ती
निवृत्तात्मा संक्षेप्ता क्षेमकृत शिवः
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः श्रीदः श्रीशः
श्रीनिवासः श्रीनिधिः श्रीविभावनः श्रीधरः
श्रीकरः श्रेयः श्रीमान लोकत्रयाश्रयः स्वक्षः स्वङ्गः
शतानन्दः नन्दिः ज्योतिर्गणेश्वरः विजितात्मा
अविधेयात्मा सत्कीर्तिश्छिन्नसंशयः उदीर्णः सर्वतश्चक्षुः अनीशः
शाश्वतस्थिरः भूशयः भूषणः भूतिः
विशोकः शोकनाशन अर्चिष्मान अर्चित कुम्भः विशुद्धात्मा
विशोधनः अनिरुद्धः अप्रतिरथः प्रद्युम्नः

अमितविक्रम: कालनेमिनिहा वीर: शौरि: शूरजनेश्वर: त्रिलोकात्मा
त्रिलोकेश: केशव: केशिहा हरि:
कामदेव: कामपाल: कामी कान्त: कृतागम: अनिर्देश्यवपु
विष्णु वीर अनन्त: धनञ्जय
ब्रह्मण्य: ब्रह्मकृत ब्रह्मा ब्रह्म ब्रह्मविवर्धन: ब्रह्मवित
ब्राह्मण: ब्रह्मी ब्रह्मज्ञ: ब्राह्मणप्रिय:
महाक्रम: महाकर्मा महातेजा: महोरग: महाक्रतु: महायज्वा
महायज्ञ: महाहवि: स्तव्य: स्तवप्रिय:
स्तोत्रम स्तुति: स्तोता रणप्रिय: पूर्ण: पूरयिता पुण्य:
पुण्यकीर्ति अनामय: मनोजव:
तीर्थकर: वसुरेता वसुप्रद: वसुप्रद: वासुदेव: वसु: वसुमना
हवि: सदगति सत्कृति
सत्ता सद्भूति: सत्परायण: शूरसेना यदुश्रेष्ठ: सन्निवास:
सुयामुन: भूतावास: वासुदेव: सर्वासुनिलय:
अनल: दर्पहा दर्पद: दृप्त: दुर्धर: अपराजित: विश्वमूर्ति:
महामूर्ति: दीप्तमूर्ति: अमूर्तिमान
अनेकमूर्ति अव्यक्त शतमूर्ति शतानन: एक: नैक:
सव: क: किम: यत
तत पदमनुत्तमम लोकबन्धु: लोकनाथ: माधव:
भक्तवसत: सुवर्णवर्ण: हेमांग वरांग चन्दनांगदी
वीरहा विषम: शून्य: घृताशी: अचल: चल:
अमानी मानद: मान्य: लोकस्वामी

त्रिलोकधृक सुमेधा मेधजः धन्य सत्यमेधाः धराधरः
तेजोवृषः द्युतिधरः सर्वशस्त्रभृतां वरः प्रग्रहः
निग्रहः व्यग्रः नैकसृङ्गः गदाग्रजः चतुर्मूर्तिः चतुर्बाहुः
चतुर्व्यूहः चतुर्गतिः चतुरात्मा चतुर्भावः
चतुर्वेदवित एकपात समावर्तः अनिवृत्तात्मा दुर्जय
दुरतिक्रमः दुर्लभः दुर्गमः दुर्गः दुरावासः
दुरारिहा शुभांगः लोकसारंग सुतन्तुः तन्तुवर्धनः इन्द्रकर्मा
महाकर्मा कृतकर्मा कृतागमः उद्भवः
सुन्दरः सुन्दः रत्ननाभः सुलोचनः अर्कः वाजसनः
शृंगी जयन्तः सर्वविज्जयी सुवर्णबिन्दुः
अक्षोभ्य सर्ववागीश्वरेश्वरः महाह्रदः महागर्तः महाभूत
महानिधिः कुमुदः कुन्दरः कुन्दः पर्जन्यः
पावनः अनिलः अमृताशः अमृतवपुः सर्वज्ञः सर्वतोमुखः
सुलभः सुव्रतः सिद्धः शत्रुजित
शत्रुतापनः न्यग्रोधः उदुम्बरः अश्वत्थः चाणूरान्ध्रनिषूदनः
सहस्त्रार्चि सप्तजिह्वः सप्तैधाः सप्तवाहनः अमूर्तिः
अनघः अचिन्तयः भयकृत भयनाशनः अणुः बृहतः कृशः
स्थूलः गुणभृत निर्गुणः
महान अधृतः स्वधृतः स्वास्यः प्राग्वंशः वंशवर्धन
भारभृत कथितः योगी योगीशः

सर्वकामद: आश्रम: श्रमण: क्षाम: सुपर्ण: वायुवाहन:
धनुर्धर: धनुर्वेद: दण्ड: दमयिता

दम: अपराजित: सर्वसह: नियन्ता: अनियम: अयम:
सत्ववान् सात्विक: सत्य सत्यधर्मपरायण:
अभिप्राय: प्रियार्ह: अर्ह: प्रियकृत प्रीतिवर्धन:
विहायसगतिज्योति सुरुचि: हुतभुक् विभु:
रवि: विरोचन: सूर्य: सवित: रविलोचन: अनन्त:
हुतभुक् भोक्ता सुखद: नैकज:
अग्रज: अनिर्विण्ण: सदामर्षी लोकाधिष्ठानम अद्भुत:
सनात सनातनतम: कपिल: कवि: अव्यय:
स्वस्तिद: स्वस्तिकृत स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिण:
अरौद्र: कुण्डली चक्री: विक्रमी ऊर्जितशासन:
शब्दातिग: शब्दसह: शिशिर: शर्वरीकर: अक्रूर:
पेशल: दक्ष: दक्षिण: क्षमिणां वर: विद्वत्तम:
वीतभय: पुण्यश्रवणकीर्तन उत्तारण: दुष्कृतिहा पुण्य:
दु:स्वप्ननाशन: वीरहा रक्षण: सन्त: जीवन:
पर्यवस्थित: अनन्तरूप: अनन्तश्री: जितमन्यु भयापह:
चतुरस्त्र गभीरात्मा विदिश: व्यादिश: दिश:
अनादि भूर्भुव: लक्ष्मी सुवीर: रुचिरांगद जनन: जनजन्मादि
भीम: भीमपराक्रम: आधारनिलय:

प्रजागरः
अथातो पुष्पहासः ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः
पणः प्रमाणम् प्राणनिलयः

प्राणभृत् प्राणजीवनः तत्त्वम् तत्त्ववित् एकात्मा
जन्ममृत्युजरातिगः भूर्भुवःस्वस्तरुः तारः सविता प्रपितामहः

यज्ञ यज्ञपतिः यज्वा यज्ञांग यज्ञवाहनः यज्ञभृत्
यज्ञकृत यज्ञी यज्ञभुक् यज्ञसाधनः

यज्ञान्तकृत् यज्ञगुह्यम् अन्नम् अन्नादः आत्मयोनिः
स्वयंजातः वैखानः सामगायनः देवकीनन्दनः स्त्रष्टा
क्षितीशः पापनाशनः शंखभृत् नन्दकी चक्री शार्ङ्गधन्वा
गदाधरः रथांगपाणिः अक्षोभ्यः सर्वप्रहरणायुधः

सर्वप्रहरणायुध ॐ नम इति

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी
श्रीमान नारायणो विष्णुर्वासुदेवोऽभिरक्षतु -३
श्री वासुदेवोऽभिरक्षतु ॐ नमइति

उत्तरन्यासः

भीष्म उवाच ---

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।

नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १ ॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।

नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥ २ ॥

वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।

वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ ३ ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।

कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥ ४ ॥

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।

सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ ५ ॥

यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।

अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ ६ ॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।

भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥ ७ ॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ८ ॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ ९ ॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम्॥ १० ॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित्।
जन्ममृत्युजराव्याधिभयं नैवोपजायते॥ ११ ॥
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १२ ॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृत पुण्यानां भक्तानां पुरुषोत्तमे ॥ १३॥
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १४ ॥
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम्॥ १५॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च॥ १६॥
सर्वागमानामाचारः प्रथमं परिकल्पते।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः॥ १७॥
ऋषयः पितरो देवा महाभूतानि धातवः।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम्॥ १८॥
योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्॥ १९॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।
त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः॥ २०॥
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च॥ २१॥
विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम्।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्॥ २२॥
न ते यान्ति पराभवम् ॐ नम इति।

अर्जुन उवाच ---

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम।

भक्तानामनुरक्तानां त्राता भव जनार्दन ॥ २३ ॥

श्रीभगवानुवाच ---

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव।

सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥ २४ ॥

स्तुत एव न संशय ॐ नम इति।

व्यास उवाच ---

वासनाद्वासुदेवस्य वासितं भुवनत्रयम्।

सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥ २५ ॥

श्री वासुदेव नमोऽस्तुत ॐ नम इति।

पार्वत्युवाच ---

केनोपायेन लघुना विष्णोर्नामसहस्रकम्।

पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥ २६ ॥

ईश्वर उवाच ---

श्रीराम राम रामेति रमे रामे मनोरमे।

सहस्रनाम तत्तुल्यं राम नाम वरानने ॥ २७ ॥ → ३।

श्रीरामनाम वरानन ॐ नम इति।

ब्रह्मोवाच ---

नमोऽस्त्वनन्ताय सहस्रमूर्तये

सहस्रपादाक्षिशिरोरुबाहवे।

सहस्रनाम्ने पुरुषाय शाश्वते

सहस्रकोटी युगधारिणे नमः॥ २८॥

सहस्रकोटी युगधारिणे नमः ॐ नम इति। ॐ तत्सदिति श्रीमद्भारते शतसाहस्र्यां संहितायां वैयासिक्यामनुशासनिके पर्वणि भीष्मयुधिष्ठर संवादे श्री विष्णोर्दिव्य सहस्रनामस्तोत्रम्।

सञ्जय उवाच ---

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।

तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ २९॥

श्रीभगवानुवाच ---

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ ३०॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।

धर्मसंस्थापनार्थाय संभवामि युगे युगे॥ ३१॥

आर्ताः विषण्णाः शिथिलाश्च भीताः

घोरेषु च व्याधिषु वर्तमानाः।

संकीर्त्य नारायणशब्दमात्रं

विमुक्तदुःखाः सुखिनो भवन्तु॥ ३२॥

॥ ॐ॥

कायेनवाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात्
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि॥

इति विष्णोर्दिव्यसहस्रनामस्तोत्रं सम्पूर्णम्।

स्वस्ति प्रजाभ्यः परिपालयन्ताम्
न्याय्येन मार्गेण महीम् महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यम्
लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
लोकोऽयम् क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥
अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदः शतम् ॥ ३ ॥
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥ ४ ॥

॥ ॐ ॥

॥ इति श्री विष्णु सहस्रनाम स्तोत्रम् सम्पूर्णम् ॥

ॐ नमः कमलनाभाय नमस्ते जलशायिने
नमस्ते केशवानन्त वासुदेव नमोऽस्तुते
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च
जगद्धिताय कृष्णाय गोविंदाय नमो नमः
आकाशात्पतितं तोयं यथा गच्छति सागरम्
सर्वदेवनमस्कारः केशवं प्रति गच्छति
एष निष्कंटकः पन्था यत्र सम्पूज्यते हरिः
कुपथं तं विजानीयाद् गोविन्दारहितागमम्
सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्
तत्फलं समवाप्नोति स्तुत्वा देवं जनार्दनम्
यो नरः पठते नित्यं त्रिकालं केशवालये
द्विकालमेककालं वा क्रूरं सर्वं व्यपोहति
दह्यन्ते रिपवस्तस्य सौम्याः सर्वे सदा ग्रहाः
विलीयन्ते च पापानि स्तवे ह्यस्मिन् प्रकीर्तिते
येन ध्यातः श्रुतो येन येनायं पठ्यते स्तवः
दत्तानि सर्वदानानि सुराः सर्वे समर्चिताः
इह लोके परे वापि न भयं विद्यते क्वचित्
नाम्नां सहस्रं योऽधीते द्वादश्यां मम सन्निधौ
शनैर्दहन्ति पापानि कल्पकोटिशतानि च
अश्वत्थसन्निधौ पार्थ ध्यात्वा मनसि केशवम्
पठेन्नामसहस्रं तु गवां कोटिफलं लभेत
शिवालये पठेन्नित्यं तुलसीवन संस्थितः
नरो मुक्तिमवाप्नोति चक्रपाणेर्वचो यथा
ब्रह्महत्यादिकं घोरं सर्वपापं विनश्यति
विलयं यान्ति पापानि चान्यपापस्य का कथा
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ॐ

ॐ आपदामपहर्तारं दातारं सर्वसम्पदाम
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्
आर्तानामार्तिहन्तारं भीतानां भीतिनाशनम
द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम्
नमः कोदण्डहस्ताय सन्धीकृतशराय च
खण्डिताखिलदैत्याय रामायऽऽपन्निवारिणे
रामाय रामभद्राय रामचंद्राय वेधसे
रघुनाथाय नाथाय सीतायाः पतये नमः।
अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ
आकर्णपूर्णधन्वानौ रक्षेतां रामलक्ष्मणौ

सन्नद्ध कवची खड्गी चापबाणधरो युवा
गच्छन ममाग्रतो नित्यं रामः पातुः सलक्ष्मणः
अच्युतानन्तगोविन्द नामोच्चारणभेषजात
नश्यन्ति सकला रोगास्सत्यं सत्यं वदाम्यहम
सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते
वेदाच्छास्त्रं परं नास्ति न देवं केशवात्परम
शरीरे जर्झरीभूते व्याधिग्रस्ते कलेवरे
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः
इदमेकं सुनिष्पन्नं ध्येयो नारायणो हरिः
यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते
विसर्गबिन्दुमात्राणि पदपादाक्षराणि च
न्यूनानि चातिरिक्तानि क्षमस्व पुरुषोत्तम । ॐ